श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्री मुक्कुर् लक्ष्मीनृसिंहदासेन कृतम्

# ॥ श्री पुत्रप्राप्त्यष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्री पुत्रप्राप्त्यष्टकम् ॥

प्रह्लाद वरदं श्रेष्ठं राज्यलक्ष्म्या समन्वितं।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ १ ॥

भरद्वाज हृदयान्ते वासिनं वासवानुजं।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ २ ॥

सुश्रोण्या पूजितं नित्यं सर्वकामदुघं हरिं ।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ ३ ॥

महायज्ञ स्वरूपं तं गुहायां नित्य वासिनं।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ ४ ॥

कृष्णा तीर विहारं तं कृष्णां रक्षितवान् स्वयम्।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ ५ ॥

यममोहित क्षेत्रेऽस्मिन् नित्य वास प्रियं परं।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ ६ ॥

चक्रिणा पूजितं सम्यक् चक्रिणं सर्वतोमुखं।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ ७ ॥

योगानन्दं नित्यानन्दं निगमागम सेवितं।
पुत्रार्थं प्रार्थये देवं मट्टपल्याधिपं हरिं।
सुतं देहि ! सुतं देहि ! सुतं देहि !॥ ८ ॥

श्री नृसिंहं हृदि ध्यात्वा मुक्कूर् नृहरिणा कृतं।
ये पठन्त्यष्टकं नित्यं इष्टप्राप्तिर्भविष्यति॥ ९ ॥

॥ इति श्री पुत्रप्राप्त्यष्टकम् संपूर्णम् ॥